॥ श्रीः ॥

# ॥ चन्द्रापीडचरितम् ॥

आसीद्विदिशाभिधानायां नगर्यां राजा शूद्रको नाम। स नवे वयसि वर्तमानोऽपि तृणवत् अवधूतवनितासुखः, सदा मृगयादिभिरेव विनोदितहृदयः, कालमयापयत्। एकदा तमास्थानमण्टपगतं काचिचाण्डालकन्यका पञ्जरस्थं शुकमादाय समुपसृत्य 'देव! विदितसकलशास्त्रार्थः, भुवनत्रितयरत्नभूतः, वैशम्पायनो नाम शुकोऽयमात्मीयः क्रियताम्' इत्युक्त्वा, पञ्जरं पुरो निधाय अपससार॥

अपसृतायां तस्याम्, स विहङ्गराजः, राजाभिमुखो भूत्वा, स्पष्टतरवर्णया गिरा कृतजयशब्दः राजानमुद्दिश्य, आर्यामिमां पपाठ—

'स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥'

श्रुत्वैतत्, राजा संजातविस्मयः, तमेवमवादीत्-'आवेदयतु भवानादितः प्रभृति कार्त्स्न्येनात्मनो वृत्तम्। जन्म कस्मिन् देशे? का माता? कस्ते पिता? कथं शास्त्राणां परिचयः? क्व वा पूर्वमुषितम्? कियद्वा वयः? कथं पञ्जरबन्धः? कथं चाण्डालहस्तगमनम्? इह वा कथमागमनम्?' इति।

वैशम्पायनस्तु किंचिदिव ध्यात्वा सादरमब्रवीत्—'देव! महतीयं कथा। यदि कौतुकमाकर्ण्यताम्॥

अस्ति विन्ध्याटव्यां पम्पसरसः पश्चिमे तीरे महान् जीर्णः शाल्मलीवृक्षः। तस्य कोटरे निवसतः पितुरहमेवैकः सूनुरभवम्। ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्। मत्संवर्धनपरस्तातोऽपि कालवशात् शबरहस्तगतोऽभवत् ॥

तदा क्षुत्पिपासातुरं भूमौ निपत्य विचेष्टमानं मामुपादाय, स्नानार्थमागतः, भगवतो जाबालेस्तनयः, हारीतो नाम तापसकुमारः, नातिदूरवर्तिनमाश्रममनयत्। तत्र सकुतूहलैः सर्वैर्मुनिकुमारैरहमहमिकासमानीतेन नीवारकणनिकरेण फलरसेन चोपचर्यमाणं मां विलोक्य, भगवान् जाबालिर्नाम महर्षिः, दिव्येन चक्षुषा मद्वृत्तमवगत्य, किंचिदिव कृतस्मितः 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत् ॥

श्रुत्वैतत्, सर्वे तापसाः तमेवं व्यजिज्ञपन्—'भगवन्! आवेद्यताम्—यदनेन कृतमपरस्मिन् जन्मनि। कोऽयमभूत्? भविष्यति च?' इति। इत्येवमुक्तः स महामुनिस्तानवादीत्—"श्रूयतां यदि कुतूहलम् ॥

आसीदुज्जयिन्यां तारापीडो नाम राजा। स च राजलक्ष्मीलीलोपधानेन बाहुना सप्तद्वीपवलयां वसुंधरां विजित्य, शुकनासनाम्नि मन्त्रिणि राज्यभारमारोप्य, सुखमुवास ॥

भूयसापि कालेन सुतमुखदर्शनसुखमलभमानः, कदाचिच्चरमे यामिनीयामे स्वप्ने सकलान्तःपुरप्रधानभूताया विलासवत्या वदने सकलकलापरिपूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत्। तस्मिन्नेव क्षणे समाहूय शुकनासाय तं स्वप्नमकथयत्। स तं समुपजातहर्षः

प्रत्युवाच—'देव ! संपन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः। कतिपयैरेवाहोभिरसंदेहमनुभवति स्वामी सुतमुखकमलावलोकनसुखम्। अद्य खलु मयापि स्वप्ने दिव्याकृतिना द्विजेन विकचं पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम्। अवितथफलाश्च प्रायो निशावसानसमयदृष्टा भवन्ति स्वप्नाः' इति॥

कतिपयदिवसापगमे च विवेश गर्भो विलासवतीम्। शनैः शनैश्च प्रतिदिनमुपचीयमानगर्भा सा, पूर्णे प्रसवसमये, प्रशस्तायां वेलायाम्, सकललोकहृदयानन्दकारिणं सुतमसूत। तस्मिन्नेव समये शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां तनयो जातः। प्राप्ते च दशमेऽहनि, पुण्ये मुहूर्ते, राजा स्वप्नानुरूपमेव स्वसूनोः चन्द्रापीडः इति नाम चकार। शुकनासोऽपि ब्राह्मणोचिताः सकलाः क्रियाः कृत्वा, विप्रजनोचितमात्मजस्य वैशम्पायन इति नाम चक्रे॥

क्रमेण च कृतचूडाकरणादिबालक्रियाकलापस्य शैशवमतिचक्राम सवैशम्पायनस्य चन्द्रापीडस्य। अथायमचिरेणैव कालेन यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानाः सर्वा विद्या जग्राह। क्रमेण समारूढयौवनारम्भं चन्द्रापीडं नरेन्द्रो यौवराज्यपदे प्रत्यतिष्ठिपत्। अथ पारसीकाधिपतिप्रेषितं जलनिधिजलादुत्थितम् अयोनिजम् इन्द्रायुधनामानम् अश्वतलजमारुह्य चन्द्रापीडः, तुरगान्तरारूढेन वैशम्पायनेनानुगम्यमानः, ससैन्यो दिग्विजयाय प्रतस्थे॥

प्रथमं शातक्रतवीम्, ततस्त्रिशङ्कुतिलकाम्, ततो वरुण

लाञ्छनाम्, अनन्तरं सप्तर्षिताराशबलां दिशं विजिग्ये। ततः क्रमेण प्रदक्षिणीकृत्य वसुधां परिभ्रमन्, कदाचित् सुवर्णपुरं नाम किरातनिवासं नगरं गत्वा, तत्र विश्रामहेतोः कतिपयान् दिवसानतिष्ठत्। एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतो विचरन् काननम्, शैलशिखरात् यदृच्छयावतीर्णं किंनरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु समुपजातकुतूहलः, कृतग्रहणाभिलाषः, तत्समीपमुपसर्पन् अदृष्टपूर्वपुरुषदर्शनत्रासात् पलायमानं तत् सुदूरमनुससार॥

'इदं गृहीतम्, इदं गृहीतम्' इत्यतिरभसाकृष्टचेताः, महाजवतया तुरंगस्य मुहूर्तमात्रेण पञ्चदशयोजनमात्रमध्वानं गत्वा, सम्मुखागतमचलशिखरमारुरोह। आरुह्य च शनैः शनैः किंनरयुगलात् दृष्टिं निवर्त्य, प्रस्तरप्रतिहतगतिप्रसरं, श्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य, स्वयमेव विहस्याचिन्तयत्—'अहो! मे शिशोरिव निरर्थकव्यापारेष्वभिनिवेशः। किमनेन किंनरयुगलेन प्रयोजनम्? यदि गृहीतमिदम्, ततः किम्? अथ न गृहीतम्, ततोऽपि किम्? न चागच्छता किंनरमिथुने बद्धदृष्टिना मया महावनेऽस्मिन् पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि, न चास्मिन् प्रदेशे परिभ्रमता मया मर्त्यः कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति। श्रुतं च मया बहुशः कथ्यमानम्—'उत्तरेण सुवर्णपुरं निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिः' इति। अयं च कैलासः। तदिदानीं प्रतिनिवृत्त्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम्। आत्म-

कृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव । अयमधुना भगवानंशुमाली दिवसश्रियो मध्यमलङ्करोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनमपनीतश्रमं कृत्वा, स्वयं च कस्यचित् तरोरधश्छायायां मुहूर्तं विश्रम्य ततो गमिष्यामि' इति चिन्तयित्वा, सलिलमन्वेषयन्, कस्यचित्, तरुषण्डस्य मध्यभागे मनोहरमच्छोदं नाम सरो दृष्टवान् ॥

तस्य च दक्षिणं तीरमासाद्य, तुरगादवतीर्य, व्यपनीतपर्याणमपगतखलीनमिन्द्रायुधं क्षितितललुठितोत्थितं गृहीतयवसग्रासं सरोऽवतार्य, पीतसलिलमिच्छया स्नातं चोत्थाप्य, अन्यतमस्य समीपवर्तिनस्तरोर्मूलशाखायां कनकशृङ्खलया चरणौ बद्ध्वा, कृपाणिकावलूनान् कतिचित् सरस्तीरदूर्वाकवलान् तदग्रतः क्षिप्त्वा, स्वयमपि सलिलमवततार ॥

ततश्च प्रक्षालितकरयुगलः, जलमयमाहारं कृत्वा मृणालशकलान्यास्वाद्य, सरःसलिलादुदगात् ॥

उत्तीर्य च प्रत्यग्रभङ्गैः कमलिनीपलाशैः लतामण्डपपरिक्षिप्ते शिलातले स्रस्तरमास्तीर्य निषसाद । मुहूर्तं विश्रान्तश्च, तस्य सरसः उत्तरे तीरे समुच्चरन्तं वीणातन्त्रीझांकारमिश्रं श्रुतिसुभगं गीतशब्दमशृणोत् । श्रुत्वा च 'कुतोऽत्र गीतसम्भूतिः' इति समुपजातकौतुकः तत्प्रभवजिज्ञासया दत्तपर्याणम् इन्द्रायुधम् आरुह्य पश्चिमया सरस्तीरसरण्या संप्रतस्थे ॥

तत्र च शून्ये सिद्धायतने, भगवतश्चराचरगुरोश्चतुर्मुखस्य त्र्यम्बकस्य दक्षिणां मूर्तिमाश्रित्याभिमुखमासीनाम्, हिमकर-

किरणावदातवर्णाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श। ततोऽवतीर्य, तरुशाखायां बद्ध्वा तुरङ्गमम्, उपसृत्य, भगवते भक्त्या प्रणम्य त्रिलोचनाय, तामेव योषितमनिमेषपक्ष्मणा चक्षुषा निरूपयन्, तस्यामेव स्फटिकमण्टपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टः, गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ॥

अथ गीतावसाने मूकीभूतवीणा सा कन्यका, समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा, परिवृत्य चन्द्रापीडमाबभाषे— 'स्वागतमतिथये ? उत्थायागम्यताम्, अनुभूयतामतिथिसत्कारः' —इति । एवमुक्तस्तु तया, संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमानः, समुत्थाय कृतप्रणामः, 'भगवति ! यथाज्ञापयसि' इत्यभिधाय, शिष्य इव तां व्रजन्तीमनुवव्राज ॥

ततः स्वावासगुहां प्रविश्य वल्कलशयनशिरोभागविन्यस्तवीणया तया विरचितां सपर्यां शिलातलोपविष्टः सप्रश्रयं प्रतिजग्राह । द्वितीयशिलातलोपविष्टया तया क्रमेण परिपृष्टः, दिग्विजयादारभ्य किंनरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः समाचचक्षे। विदितसकलवृत्तान्ता समुत्थाय सा कन्यका, शङ्खमयं भिक्षाकपालमादाय, तरुतलेषु विचचार । अचिरेण तस्याः स्वयं पतितैः फलैरापूर्यत भिक्षाभाजनम् । आगत्य च तेषामुपयोगाय नियुक्तवती चन्द्रापीडम् । दृष्ट्वैतत्, स राजकुमारः सविस्मयः समुत्थाय तमेव प्रदेशमिन्द्रायुधमानीय, नातिदूरे संयम्य, निर्झरजलनिर्वर्तितस्नानविधिः, तान्यमृतरसस्वादून्युपभुज्य फलानि, पीत्वा च प्रस्रवणजलम् उपस्पृश्यैकान्ते तावदवतस्थे ॥

अथ निर्वर्तितसन्ध्योचिताचारां परिसमापिताहारां शिलातले विस्रब्धमुपविष्टां तां निभृतमुपसृत्य, नातिदूरे समुपविश्य, मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत् 'भगवति ! महत् खलु भवद्दर्शनात्प्रभृति मम कौतुकमस्मिन् विषये । कतरन्मरुतामृषीणां गन्धर्वाणामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् ? किंनिमित्तं वा वनमिदममानुषमेकाकिन्यधिवससि ? आवेदयतु भवती सर्वम्' इति ॥

एवमभिहिता सा किमप्यन्तर्ध्यायन्ती, तूष्णीं मुहूर्तमिव स्थित्वा, दीर्घमुष्णं च निश्वस्य, शनैः प्रत्यवादीत्—'राजपुत्र ! किमनेन मम मन्दभाग्यायाः जन्मनः प्रभृति वृत्तान्तेन श्रुतेन । तथापि यदि महत् कुतूहलम्, तत्कथयामि । श्रूयताम् ॥

पुरा खलु भगवतो दक्षस्य प्रजापतेः अतिप्रसूतानां मध्ये कन्यकानां द्वे सुते मुनिररिष्टा च बभूवतुः । तत्र मुनेस्तनयश्चित्रसेनादीनां भ्रातॄणां षोडशश्चित्ररथो नाम समुत्पन्नः । स च प्रख्यातपराक्रमः सर्वेषां गन्धर्वाणामाधिपत्यं शैशव एवावाप्तवान् । इतश्च नातिदूरे हेमकूटो नाम पर्वतस्तस्य निवासः । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां षण्णां सोदर्याणां ज्येष्ठो हंसो नाम गन्धर्वः, तस्मिन् द्वितीये गन्धर्वकुले राज्यपदमासादितवान् । तस्यापि स एव गिरिरधिवासः । स च सोममयूखसम्भवादप्सरःकुलात् समुद्भूतां गौरीं नाम कन्यकां प्रणयिनीमकरोत् ॥

तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमेकैव सुता समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन

महोत्सवेन मज्जन्मामिनन्द्य, दशमेऽहनि 'महाश्वेता' इत्यन्वर्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्ती, शैशवमतिनीतवती । क्रमेण च कृतं मे वपुषि नवयौवनेन पदम् ॥

अथैकदा मधुमासदिवसेषु, अम्बया सममिदमच्छोदं सरः स्नातुमभ्यागमम् । तत्र झटिति वनानिलेनोपनीतम्, अभिभूतान्यपरिमलं कुसुमगन्धमभ्याजिघ्रम् । 'कुतोऽयम्' इत्युपारूढकुतूहला कतिचित्पदानि गत्वा, काममिवापरम् अतिमनोहरम्, सवयसा सह स्नानार्थमागतं मुनिकुमारकमपश्यम् । तेन च कर्णावतंसीकृतां कुसुममञ्जरीमभिवीक्ष्य, 'अस्या नन्वयं परिमलः' इति मनसा निश्चित्य, तं तपोधनयुवानम् ईक्षमाणाहम्, नवयौवनसुलभेन कुसुमायुधेन परवशीकृता अभवम् ॥

अथ 'अशेषजनपूजनीया चेयं जातिः' इति कृत्वा सविभ्रममस्मै प्रणाममकरवम् । कृतप्रणामायां मयि, मद्विकारदर्शनापहृतधैर्यं तमपि कुमारं तरलतामनयदनङ्गः । अथ मुहूर्तमिव स्थित्वा, तं द्वितीयमस्य सहचरं मुनिबालकमुपसृत्य प्रणामपूर्वकमपृच्छम्—' भगवन् ! किमभिधानः ? कस्य वायं तपोधनयुवा ? किन्नाम्नस्तरोरियमनेनावतंसीकृता कुसुममञ्जरी ?' इति ॥

स तु मामीषद्विहस्याब्रवीत् ' बाले ! किमनेन पृष्टेन प्रयोजनम् ? अथ कौतुकम्, आवेदयामि ; श्रूयताम्—

"अस्ति सकलभुवनप्रख्यातकीर्तिः रूपातिशयितनलकूबरः, श्वेतकेतुर्नाम दिव्यलोकनिवासी महामुनिः । स च कदाचित्

देवतार्चनकमलान्युद्धर्तुं मन्दाकिनीमवतरन्तं पुण्डरीकोपविष्टा देवी लक्ष्मीर्ददर्श । तद्रूपमवलोकयन्त्यास्तस्याः मन्मथविकृतं मन आसीत् । सद्य एव तया मानसः कुमार उदपादि । ततस्तमादाय सा,—'भगवन् ! गृहाण तवायमात्मजः' इत्युक्त्वा श्वेतकेतवे ददौ । असावपि तस्य बालजनोचिताः सर्वाः क्रियाः कृत्वा पुण्डरीकसम्भवतया तदेव 'पुण्डरीक' इति नाम चक्रे ॥

ततः क्रमेण तम् आगृहीतसकलविद्याकलापम् अकार्षीत् । सोऽयं संप्रति चतुर्दशीति भगवन्तं भवानीपतिमुपासितुमागतः । इयं च पारिजातकुसुममञ्जरी रूपातिशयश्रद्धादरया मार्गसङ्गतया नन्दनवनदेवतया समर्पिता अनेन कर्णपूरीकृता" इति ॥

इत्युक्तवति तस्मिन्, स तपोधनयुवा—'अयि कुतूहलिनि ! किमनेन प्रश्नायासेन ? यदि रुचितपरिमला, गृह्यतामियम्' इत्युक्त्वा, समुपसृत्य आत्मीयात् श्रवणात् अपनीय मदीये श्रवणपुटे तामकरोत् ॥

अत्रान्तरे छत्रग्राहिणी मामेवमवोचत्—'भर्तृदारिके ! स्नाता देवी । प्रत्यासीदति गृहगमनकालः । तत्क्रियतां मज्जनविधि-रिति । ततोऽहं तन्मुखादतिकृच्छ्रेण दृष्टिमाकृष्य, स्नातुमुदचलम् । स्नातोत्थिता च, कथमपि सखीजनेन नीयमाना, तमेव चिन्तयन्ती, स्वभवनमम्बया सममयासिषम् । गत्वा च प्रविश्य कन्यान्तःपुरम्, ततः प्रभृति तद्विरहातुरा सर्वव्यापारानुत्सृज्य एकाकिनी निःसन्दमतिष्ठम् ॥

अथ च मदन्तरङ्गनिर्विशेषया तरलिकाभ्यया ताम्बूल-

करङ्कवाहिन्या सह, तद्गतयैव कथया कथमपि तं दिवसमत्यवाहयम् ॥

अथ दिनान्ते छत्रग्राहिणी समागत्य माम् अकथयत्—'भर्तृदारिके ! यौ तापसकुमारौ अस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरन्यतरो द्वारि तिष्ठति' इति । अहं तु कञ्चुकिनं समाहूय 'गच्छ, प्रवेश्यताम्' इति प्राहिणवम् ॥

अथ मुहूर्तादिव तं तस्य सवयसं कपिञ्जलमागच्छन्तमपश्यम् । अन्तिकमुपगताय चास्मै सादरं स्वयमासनमुपाहरम् । उपविष्टस्य तस्य प्रक्षाल्य चरणौ, उपमृज्योत्तरीयाञ्चलेन, नातिदूरे समुपाविशम् ॥

अथ कपिञ्जलो मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया 'भगवन् ! अव्यतिरिक्तेयमस्मच्छरीरात् । अशङ्कितमभिधीयताम्' इत्यवोचम् । एवमुक्तश्च मया कपिञ्जल एवमवादीत् 'राजपुत्रि ! किं ब्रवीमि । किमारब्धं दैवेन । अपगतायां भवत्याम्, सरस्वतीरसमीपवर्तिनि लतागहने लिखितमिवावस्थितम्, मन्मथावेशस्य परां कोटिमधिरूढं सवयसमहमद्राक्षम् । उपसृत्य च 'सखे पुण्डरीक ! कथय किमिदम् ?' इत्यपृच्छम् ॥

अथ सुचिरं विलोक्य माम्, आयततरं निःश्वस्य,—'सखे कपिञ्जल ! प्रत्यक्षितसर्ववृत्तान्तोऽपि किं मां पृच्छसि ? इति लज्जामन्थरमवदत् । अहं तु तदाकर्ण्य, यावच्छक्ति निवारणीय इति मनसावधार्याब्रवम्—'सखे पुण्डरीक ! सुविदितमेतन्मम । यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम् ? उत धर्मशास्त्रेषु पठितम् ?

उतापरस्तपसां प्रकारः ? कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम् ! मूढो हि मदनेनायास्यते । तद्धैर्यमवलम्ब्य, निर्भर्त्स्यतामयं दुराचारः कामः' इत्येवं वदत एव मे वचनमाक्षिप्य, पाणौ मामवलम्ब्य अवोचत्—'सखे ! किं बहुनोक्तेन ? सर्वथा स्वस्थोऽसि । आशीविषविषवेगविषमाणां कुसुमचापसायकानां पतितोऽसि न गोचरे । सुखमुपदिश्यते परस्य । मम तु गत इदानीमुपदेशकालः । किं करोमि । को वापरस्त्वत्समो मे जगति बन्धुः । यावत् प्रणिमि, तावदस्य मदनसंतापस्य प्रतिक्रियां कर्तुमिच्छामि' इति ॥

एतदाकर्ण्याहमचिन्तयम्—'अतिभूमिं गतोऽयं न शक्यते निवर्तयितुम् । अकालान्तरक्षमश्चायमस्य मदनविकारः । अतिगर्हितेनाकृत्येनापि रक्षणीयान् सुहृदसून् मन्यन्ते साधवः । तदतिहेपणमकर्तव्यमपि एतदस्माकमवश्यकर्तव्यमापतितम् । का चान्या गतिः । प्रयामि तस्याः सकाशम् । आवेदयाम्येतामवस्थाम्' इति चिन्तयित्वा, 'कदाचिदनुचितव्यापारप्रवृत्तं मां संजातलज्जो निवारयेत्' इत्यनिवेद्यैव तस्मै, सव्याजमुत्थायागतोऽहम् । अत्र यत् प्राप्तकालं तत् करोतु भवती'' इति ॥

तदाकर्ण्य, 'दिष्ट्यायमनङ्गो मामिव तमप्यनुबध्नाति' इति सर्वानन्दानामुपरि वर्तमानाम्, 'किं मया प्रतिपत्तव्यम्' इति विचारयन्तीमिव मां प्रतीहारी ससंभ्रमं प्रविश्याकथयत्—'भर्तृदारिके ! त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्ता' इति । तच्छ्रुत्वा कपिञ्जलः सत्वरमुत्थाय 'राजपुत्रि ! गच्छामि,

सुहृत्प्राणरक्षादाक्षिणार्थम् अयमञ्जलिः' इत्यभिधाय, प्रतिवचनम् अप्रतीक्ष्यैव प्रययौ ॥

अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तत्रागत्य 'किं कृतम् ; किमभिहितम्' इति सर्वमेव शून्यहृदया नालक्षयम् । गतायां च तस्याम्, अस्तमुपगते भगवति सवितरि, किंकर्तव्यतामूढा, तामेव तरलिकामपृच्छम्—'अयि तरलिके ! कथं न पश्यसि, दृढमाकुलं मे हृदयम् । न स्वयमण्वपि कर्तव्यमलमस्मि परिज्ञातुम् । उपदिशतु मे भवती, यदत्र साम्प्रतम् । अयमेवं त्वत्समक्षमेवमभिधाय गतः कपिञ्जलः यदि तावदितरकन्यकेव लज्जां विहाय, जनापवादमचिन्तयित्वा, सदाचारमतिक्रम्य, स्वयमुपगम्य, पाणिं ग्राहयामि ; तदा गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षमङ्गीकरोमि, नियतं स्पृशेन्मां मुनिजनवधजनितं महत् पातकम्' इत्येवमुच्चारयन्त्यामेव मयि, अभिनवोदितेन रजनिकरबिम्बेन रमणीयताम् अनीयत यामिनी ॥

तदा समुपारूढरागम् अमृतमयमिन्दुमण्डलं मृत्युमिव विलोकयन्तीं मूर्च्छा मां निमीलितलोचनामकार्षीत् । अथ संभ्रान्ता तरलिका सरभसमुपनीताभिः चन्दनचर्चाभिः, तालवृन्तानिलैश्च लब्धसंज्ञां माम् आबद्धाञ्जलिरेवमवादीत्—'भर्तदारिके ! किं लज्जया गुरुजनापेक्षया वा । प्रसीद, प्रेषय माम् । आनयामि ते हृदयदयितम्, उत्तिष्ठ, स्वयं वा तत्र गम्यताम्' इति ॥

एवं वादिनीं ताम् 'उत्तिष्ठ, यथाकथंचिदनुहृतजीविता

संभावयामि हृदयदयितं जनम्' इत्यभिदधाना, कथंचित्तामेवावलम्ब्योदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं चक्षुः । उपजातशङ्का चाचिन्तयम्—'इदमपरं किमप्युपक्षिप्तं दैवेन' इति । अथ गृहीतविविधकुसुमताम्बूलाङ्गरागया तरलिकयानुगम्यमाना, रक्तांशुकेन कृतशिरोऽवगुण्ठना, केनचिदपि परिजनेनानुपलक्ष्यमाणा, कन्यकान्तःपुरान्निरयासिषम् । निर्गत्य च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम् । तत्र तस्यैव सरसः पश्चिमे तटे पुरस्स्येव रुदितध्वनिं विप्रकर्षात् नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन प्रथममेव मनस्याहितशङ्का, 'तरलिके ! किमिदम् ?' इति सभयमभिदधाना, तदभिमुखमतित्वरितमगच्छम् ॥

अथ निशीथप्रभावात् दूरदेव विभाव्यमानस्वरम् उन्मुक्तार्तनादम् 'हा हतोऽस्मि ! हा किमिदमापतितम् ! हा दुरात्मन् मदन निर्घृण ! किमिदमकृत्यमनुष्ठितम् । हा दुर्विनीते महाश्वेते ! किमनेन तेऽपकृतम् ; आः पाप दुश्चरित चन्द्रचाण्डाल ! कृतार्थोऽसीदानीम् । हा भगवन् श्वेतकेतो पुत्रवत्सल ! न वेत्सि मुषितमात्मानम् । हा तपः ! निराश्रयमसि । हा सरस्वति ! विधवासि । सखे ! प्रतिपालय माम् । अहमपि भवन्तमनुयास्यामि । न शक्नोमि भवता विना क्षणमप्यवस्थातुम्' इत्येतान्यन्यानि च विलपन्तं कपिञ्जलमश्रौषम् ॥

तच्च श्रुत्वा, दूरादेव मुक्तकनाराक्रन्दा, यथाशक्ति त्वरितैः पादप्रक्षेपैः पदे पदे प्रस्खलन्ती, तं प्रदेशं गत्वा, सरस्तीरसमीपवर्तिनि शशिमणिशिलातले विरचितं मृणालमयं शयनमधिशयानं

तत्क्षणविगतजीवितं तं जीवितनाथमद्राक्षम् । उद्भूतमूर्छान्धकारा च, तदा 'क्वाहमगमम् । किमकरवम् । किं व्यलपम्' इति सर्वमेव नाज्ञासिषम् । ततश्च तथाभूते तस्मिन्नवस्थान्तरे, मरणैकनिश्चया तरलिकामब्रवम्—'अयि ! उत्तिष्ठ 'काष्ठान्याहृत्य विरचय चिताम् । अनुसरामि जीवितेश्वरम्' इति ॥

अत्रान्तरे चन्द्रमण्डलविनिर्गतो दिव्याकृतिः पुरुषः, मृणालधवलाङ्गुलिभ्यां बाहुभ्यां तमुपरतमुत्क्षिपन्, गभीरेण स्वरेण 'वत्से महाश्वेते ! न परित्याज्यास्त्वया प्राणाः । पुनरपि तवानेन सह भविष्यति समागमः' इति मामभिधाय, सहैवानेन गगनतलमुदपतत् । कपिञ्जलस्तु 'दुरात्मन् ! क मे वयस्यमपहृत्य गच्छसि ?' इति अभिधाय, उन्मुखः सवेगमुत्तरीयवल्कलेन परिकरमाबध्य, तमेवानुसरन् अन्तरिक्षमुदगात् । पश्यन्त्या एव मे सर्व एव ते तारागणमध्यमविशन् ॥

अहं तु द्वितीयेनेव प्रियमरणेन कपिञ्जलगमनेन द्विगुणीकृतशोका तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती । प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा, कृतनिश्चया, तमेव कमण्डलुमादाय, तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा, ब्रह्मचर्यमाश्रित्य, देवमिमं शरणार्थिनी स्थाणुमाश्रिता । अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः, सहाम्बया सहबन्धुवर्गेणागत्य तैस्तैरुपायैः गृहगमनाय मे प्रयतमानः दृढनिश्चयां मां विसृज्य, निराशः सशोक एव गृहानयासीत् । साहम् एवंविधा निर्लज्जा निष्फलजीविता निःसुखा च' इत्युक्त्वा वल्कलोपान्तेन वदनमाच्छाद्य, मुक्तकण्ठं प्रारोदीत् ॥

चन्द्रापीडस्तु बहुभिरुपसान्त्वनैः संस्थाप्य ताम्, अञ्जलिपुटोपनीतेन निर्झरजलेन प्रक्षालितमुखीमकारयत्। अथ क्षीणे दिवसे, महाश्वेता मन्दं मन्दमुत्थाय, पश्चिमां सन्ध्यामुपास्य, कमण्डलुजलेन प्रक्षालितचरणा, वल्कलशयनीये सखेदमुष्णं च निःश्वस्य निषसाद ॥

चन्द्रापीडोऽप्युत्थाय, सकुसुमं प्रस्रवणजलाञ्जलिमवकीर्य कृतसन्ध्याप्रणामः, तस्मिन् द्वितीये शिलातले मृदुभिर्लतापल्लवैः शय्यामकल्पयत्। उपविष्टश्च तस्यां पुनः पुनर्मनसा तमेव महाश्वेतावृत्तान्तमनुभावयन् पुनरेनामप्राक्षीत्—'भगवति! परिचारिका तरलिका क्व गता?' इति ॥

अथ साकथयत्—'महाभाग! श्रूयताम्—अमृतसंभवादप्सरःकुलात् मदिरेति नाम्ना कन्यकाभूत्। तस्याश्चासौ देवश्चित्ररथः पाणिमग्रहीत्। तयोश्च दुहितृरत्नमुदपादि कादम्बरीति नाम्ना। सा च मे जन्मनः प्रभृति बालमित्रम्। सेयमस्मुनैव मदीयवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्—नाहं कथंचिदपि सशोकायां महाश्वेतायाम्, आत्मनः पाणिं ग्राहयिष्यामि—इति। गन्धर्वराजश्च कर्णपरंपरया दुहितुर्निश्चयमश्रौषीत्। गच्छति काले, समुपारूढयौवनामालोक्य स ताम् एकापत्यतयातिप्रियतया च किंचिदप्यभिधातुमशक्तो बभूव। अथायमपरमनुपायान्तरम्, 'वत्से महाश्वेते! त्वमेव शरणमिदानीं कादम्बरीमनुनेतुम्' इति संदिश्य, क्षीरोदनामानं कञ्चुकिनमद्यैव प्रत्युषसि मत्समीपं प्रेषितवान्। ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च, 'सखि

कादम्बरि! किं दुःखितमपि जनम् अतितरां दुःखयसि ? जीवन्तीमिच्छसि चेन्माम्, तत्कुरु गुरुवचनमवितथम्' इति संदिश्य, क्षीरोदेन सार्धं सा तरलिका विसर्जिता। गतायां च तस्याम्, अनन्तरमेवेमां भूमिमनुप्राप्तो महाभाग-' इत्यभिधाय तूष्णीमभवत् ॥

अथ क्रमेण सुप्तामालोक्य महाश्वेताम्, चन्द्रापीडः पल्लवशयने शनैः शनैः समुपविष्टः, 'किंनु खल्वस्यां वेलायां मामन्तरेण चिन्तयति वैशम्पायन-' इति चिन्तयन्नेव, निद्रां ययौ। अथ प्रभाते सन्ध्यामुपास्य शिलातले समुपविष्टायां महाश्वेतायाम्, निर्वर्तितप्राभातिकविधौ चन्द्रापीडे, षोडशवर्षवयसा केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रादुरासीत्। समीपमुपसृत्य कृतप्रणामां तां महाश्वेता 'किं त्वया दृष्टा प्रियसखी कादम्बरी ? करिष्यति वा तदस्मद्वचनम् ?' इत्यपृच्छत् ॥

अथ सा तरलिका व्यजिज्ञपत्—'भर्तृदारिके! दृष्टा मया कादम्बरी। विज्ञापिता च निखिलं भर्तृदुहितुः सन्देशम्। आकर्ण्य च यत्तया प्रतिसंदिष्टम्, तदेष तस्या एव वीणावाहकः केयूरकः कथयिष्यति' इति। विरतवचसि तस्याम्, केयूरकोऽब्रवीत् "भर्तृदारिके! देवी कादम्बरी दत्तकण्ठग्रहा त्वां विज्ञापयति-'यत्र भर्तृविरहविधुरा प्रियसखी महत् कृच्छ्रमनुभवति, तत्राहमविगणय्यैतत्, कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि ? कथं वा मम सुखं भविष्यति ? तन्मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि" इति ॥

महाश्वेता, तु तच्छ्रुत्वा, सुचिरं विचार्य, 'गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा, केयूरकं प्राहिणोत्। गते

च केयूरके चन्द्रापीडमुवाच—'राजपुत्र ! रमणीयो हेमकूटः । चित्रा चित्ररथराजधानी । सरलहृदया महानुभावा च कादम्बरी । तदितो मयैव सह गत्वा हेमकूटम्, दृष्ट्वा च तत्र मत्तिर्विशेषां कादम्बरीम्, अपनीय तस्या मोहविलसितम्, एकमहो विश्रम्य, श्वोभूते प्रत्यागमिष्यसि'—इति । इत्युक्तवतीं ताम्, चन्द्रापीडः—'भगवति ! दर्शनात् प्रभृति परवानयं जनः । कर्तव्येषु यथेष्टं नियुज्यताम्'—इत्यभिधाय, तया सहैवोदचलत् ॥

क्रमेण गत्वा हेमकूटम्, आसाद्य गन्धर्वराजकुलम्, अवाप्य कन्यान्तःपुरम्, श्रीमण्डपस्य मध्यभागे नातिमहतः पर्यङ्कस्योपाश्रये धवलोपधानन्यस्तभुजलतावष्टम्भेनावस्थितां सर्वरामणीयकानामेकनिवासभूतां कादम्बरीं ददर्श । सा च सरभसमुत्थाय, महाश्वेतां कण्ठे जग्राह । महाश्वेतापि दृढदत्तकण्ठग्रहा तामवादीत्—'सखि कादम्बरि ! भारते वर्षे तारापीडो नाम राजा वसुमतीम् आसमुद्रं प्रशास्ति । तस्यायं चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेनानुगतो भूमिमिमाम् । एष च दर्शनात् प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः । कथिता चास्य मया बहुप्रकारं प्रियसखी । तत् 'अपूर्वदर्शनोऽयम्' इति विमुच्य लज्जाम्, यथा मयि, तथात्रापि वर्तितव्यम्'—इति ॥

कादम्बरी तु सविभ्रमकृतप्रणामा महाश्वेतया सह पर्यङ्के निषसाद । चन्द्रापीडश्च ससंभ्रमं परिजनोपनीतायां हेमपादाङ्कितायां पीठिकायां समुपाविशत् । परिजनोपनीतेन सलिलेन कादम्बरी स्वयमुत्थाय महाश्वेतायाश्चरणौ प्रक्षाल्य, उत्तरीयांशुकेनापमृज्य,

पुनः पर्यङ्कमारुरोह । चन्द्रापीडस्यापि कादम्बर्याः सखी मदलेखा प्रक्षालितवती चरणौ ॥

अथ परस्परकुशलानुयोगानन्तरं ताम्बूलदानोद्यतां कादम्बरीं महाश्वेता बभाषे—'सखि ! सर्वाभिरस्माभिः अयमभिनवागतश्चन्द्रापीड आराधनीयः। तदस्मै तावद्दीयताम्'—इति । इत्युक्ता च सा किंचिद्विवर्तितावनतमुखी शनैरव्यक्तमिव—'प्रियसखि ! लज्जेऽहमनुपजातपरिचया प्रागल्भ्येनानेन । गृहाण, त्वमेवास्मै प्रयच्छ'—इति तामुवाच। पुनः पुनरभिधीयमाना च तया, ग्राम्येव कथमपि चिरात् दानाभिमुखं मनश्चक्रे । साध्वसपरवशा च सा, महाश्वेतामुखादनाकृष्टदृष्टिरेव हस्तपल्लवं प्रसार्य, चन्द्रापीडहस्ते ताम्बूलमर्पितवती। गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत् ॥

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत्—'आयुष्मति ! देवश्चित्ररथः, देवी च मदिरा त्वां द्रष्टुमाह्वयतः'—इति। एवमभिहिता गन्तुकामा सा 'सखि ! चन्द्रापीडः क्वास्ताम् ?' इति कादम्बरीमपृच्छत् । सा तु—'सखि महाश्वेते ! किमेवमभिदधासि ? दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः, किमुत भवनस्य, विभवस्य, परिजनस्य वा । यत्रास्मै रोचते, प्रियसखीहृदयाय वा, तत्रायमास्ताम्'—इति प्रत्युवाच ॥

तच्छ्रुत्वा महाश्वेता—'तदत्रैव त्वत्प्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्ताम्'—इत्यभिधाय, गन्धर्वराजं द्रष्टुं ययौ। चन्द्रापीडोऽपि तयैव सह निर्गत्य, केयूरकेणोपदिश्यमानमार्गः क्रीडापर्वतमणिमन्दिरमगात्। गते च तस्मिन्, गन्धर्व-

राजपुत्री विसृज्य सकलं परिजनम्, परिमितपरिचारिकाभिरनुगम्यमाना, प्रासादमारुरोह। तत्र च शयनीये समुपविश्यैवमचिन्तयत्—'अहो! किमारब्धं चपलया मया। परित्यक्तः कुलकन्यकानां क्रमः। न परीक्षितास्य चित्तवृत्तिः। आसन्नवर्ती सखीजनोऽप्युपलक्षयतीति मन्दया मया न लक्षितम्। श्रुत्वैतं वृत्तान्तं किं वक्ष्यत्यम्बा तातो वा। किं करोमि! केनोपायेन स्खलितमिदं प्रच्छादयामि। तथा महाश्वेताव्यतिक्रमेण प्रतिज्ञा कृता। पूर्वकृतापुण्यसंचयेनैवायमानीतो मम विप्रलम्भकश्चन्द्रापीडः'—इति संचिन्त्य गुर्वीं लज्जामुवाह॥

चन्द्रापीडोऽपि प्रविश्य मणिगृहम्, शिलातलास्तीर्णोभयत उपर्युपरि निवेशितबहूपधानायां कुथायां निपत्य केयूरकेण उत्सङ्गे गृहीतचरणयुगलो दोलायमानेन चेतसा चिन्तां विवेश। 'किं तावदस्या गन्धर्वराजदुहितुः सहजा एते विलासाः? आहोस्विद् अनाराधितप्रसन्नेन मकरकेतुना मयि नियुक्ताः? यन्मां सरागेण चक्षुषा तिर्यग्विलोकयति। विलोकिता च मया लज्जयात्मानमावृणोति' इति॥

अथ कादम्बरीपरिजनेन निर्वर्तितस्नानविधिः अर्चिताभिमतदैवतः क्रीडापर्वत एव सर्वमाहारादिकम् अह्नः कर्म चक्रे। अथ शनैः शनैरदर्शनतामुपगते भगवति गभस्तिमालिनि कादम्बरी चन्द्रापीडसमीपमागम्य कृतप्रस्तावा—'क्व राजा तारापीडः? क्व देवी विलासवती? कथमार्यः शुकनासः? कीदृशी चोज्जयिनी? कियत्यध्वनि सा? कीदृक् भारतं वर्षम्?'—इत्यशेषं पप्रच्छ। एवंविधाभिश्च

कथाभिः सुचिरं स्थित्वा उत्थाय केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य शयनसौधशिखरे दुकूलवितानास्तीर्णं शयनम् अभजत। चन्द्रापीडोऽपि तत्रैव शिलातले केयूरकेण संवाह्यमानचरणः कादम्बर्याः निरभिमानतामतिगम्भीरतां च, महाश्वेतायाः निष्कारणवत्सलताम्, गन्धर्वलोकस्यातिसमृद्धिं च, मनसा भावयन् क्षणादिव क्षणदां क्षपितवान् ॥

अथ समुद्गते सवितरि शिलातलात् उत्थाय चन्द्रापीडः कृतसन्ध्यानमस्कृतिः गृहीतताम्बूलः—'केयूरक ! विलोकय, देवी कादम्बरी प्रबुद्धा वा न वा ? क्व वा तिष्ठति ?'—इत्यवोचत्। गतप्रतिनिवृत्तेन च तेन—'देव ! मन्दरप्रासादस्य अधस्तात् अङ्गणसौधवेदिकायां गन्धर्वराजसकाशात् प्रतिनिवृत्तया महाश्वेतया सह अवतिष्ठते'—इत्यावेदिते, तामालोकितुमाजगाम। समुपसृत्य कंचित् कालं स्थित्वा महाश्वेतायाः वदनं विलोक्य मन्दस्मितम् अकरोत्। असौ तु तावतैव विदिताभिप्राया कादम्बरीम् अब्रवीत्—'सखि ! जिगमिषति खलु कुमारः। पृष्ठतः राजचक्रम् अविदित-वृत्तान्तं दुःखमास्ते। अतः अभ्यनुजानातु भवती'—इति ॥

अथ कादम्बरी—'स्वाधीनोऽयं जनः सपरिजनः कुमारस्य। क इवात्रानुरोधः ?'—इत्यभिधाय गन्धर्वकुमारान् आहूय 'प्रापयत कुमारं स्वां भूमिम्' इत्यादिदेश। चन्द्रापीडोऽप्युत्थाय—'देवि ! किं ब्रवीमि ? बहुभाषिणो न श्रद्दधाति लोकः। स्मर्तव्योऽस्मि परि-जनकथासु'—इत्यभिधाय कन्यकान्तःपुरात् निर्जगाम। कादम्बरी-वर्जमशेषः कन्यकाजनः तं व्रजन्तं आबाह्यतोरणात् अनुवव्राज।

निवृत्ते च कन्यकाजने, केयूरकोपनीतं वाजिनमारुह्य गन्धर्वकुमारैरनुगम्यमानो हेमकूटात् निर्जगाम । क्रमेण च प्राप्य महाश्वेताश्रमम्, अच्छोदसरस्तीरे संनिविष्टम् इन्द्रायुधखुरपुटानुसारेणैव आगतम् आत्मनः स्कन्धावारम् अपश्यत् । निवर्त्य च गन्धर्वकुमारान् सानन्देन सविस्मयेन स्कन्धावारजनेन प्रणम्यमानः स्वभवनं विवेश ॥

अथ वैशम्पायनेन पत्रलेखाभिधानया ताम्बूलकरङ्कवाहिन्या च सह 'एवं कादम्बरी, एवं महाश्वेता' इत्यनयैव कथया दिवसम् अनैषीत् । अपरेद्युः प्रभाते स्वयम् आस्थानमण्डपगतः सहसैव प्रतीहारेण सह प्रविशन्तं केयूरकं ददर्श । तं च कुशलानुयोगानन्तरं रह प्रदेशम् आनीय—'कथय, को वा वृत्तान्तो गन्धर्वलोके ? आसीद्वा कचिदस्मदाश्रयिणी कथा ?'—इत्यपृच्छत् । केयूरकस्त्वेवम् आचचक्षे—'देव ! निर्गते त्वयि देवी कादम्बरी प्रयत्नेन केनापि आधिना परिभूयमाना किमपि चिन्तयन्ती स्नानपानाशनादिष्वपि शिथिलितप्रयत्ना दिवसम् अनैषीत् । उपमि च देवस्य वार्तोपलम्भाय माम् आदिष्टवती'—इति । चन्द्रापीडस्तदाकर्ण्य मरभसम् आरोपितपर्याणम् इन्द्रायुधम् आरुह्य पश्चादारोप्य पत्रलेखाम् अन्यतुरगारूढेन केयूरकेण अनुगम्यमानो हेमकूटं ययौ ॥

आसाद्य च कादम्बरीभवनद्वारम्, अवतीर्य द्वारपालार्पिततुरगः कादम्बरीप्रथमदर्शनकुतूहलिन्या पत्रलेखया अनुगम्यमानः केयूरकेण उपदिश्यमानमार्गो हिमगृहमध्यभागे कुसुमशयनम् अधिशयानां कादम्बरीम् अवलोकयत् ॥

'अथ सरभसम् उत्थाय विरचितसमुदाचारायै तस्यै केयूरकः उपसृत्य—'देवि ! देवस्य चन्द्रापीडस्य प्रसादभूमिः एषा ताम्बूलकरङ्कवाहिनी'—इत्यभिधाय पत्रलेखाम् अदर्शयत् । कादम्बरी तु दृष्ट्वा ताम्, 'अहो ! मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयांबभूव । कृतप्रणामां च तां सादरम् एह्येहि इत्यभिधाय आत्मनः समीपे समुपावेशयत् । चन्द्रापीडश्च कादम्बर्यामियं विकृतिः मनसिजकृता वा न वेति सन्दिहानो निपुणालापेनापृच्छत्—'देवि! कामरतिं निमित्तीकृत्य प्रवृत्तोऽयं सन्तापः ? इच्छामि च देहदानेनापि स्वस्थामत्रभवतीं कर्तुम्'—इति ॥

अथ कादम्बरी शालीनतया तूष्णीमेव स्थित्वा मन्दस्मितं केवलमकरोत् । मदलेखा प्रत्यवादीत्—'कुमार, ! किं कथयामि ? अस्याः खलु कुमारभावोपेतायाः दारुणोऽयम् अकथनीयः सतापः' इति । चन्द्रापीडोऽपि उभयथा घटमानार्थतया सन्देहदोलारूढेनैव चेतसा, महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिः महान्तं कालं स्थित्वा, महता यत्नेन मोचयित्वा आत्मानं स्कन्धावारगमनाय निर्ययौ । निर्गत्य च तुरङ्गम् आरुरुक्षन्तं पश्चादागत्य केयूरकः अभिहितवान्—'देव ! मदलेखा विज्ञापयति—'देवी कादम्बरी प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्यमानाम् इच्छति । पश्चात् यास्यति'–इति, श्रुत्वा देवः प्रमाणम्"–इति । आकर्ण्य, चन्द्रापीडः तथेति अभ्युपगम्य तां तत्रैव स्थापयित्वा स्कन्धावारम् आजगाम । प्रविशन्नेव पितुः समीपात् आगतम् आलेखहारकं प्रीतिविस्फारितेन चक्षुषा अभिवीक्ष्य विधृततुरङ्गमो दूरादेव अपृच्छत्—'भद्र !

कच्चित् कुशली तातः सह सर्वेण परिजनेन ? अम्बा च सर्वान्तःपुरैः ? —इति । अथासौ उपसृत्य प्रणामानन्तरम्—'देव ! यथाज्ञापयसि' इत्यभिधाय लेखद्वितयमर्पयाम्बभूव । युवराजस्तु तत् शिरसि कृत्वा स्वयमेव तत् उन्मुच्य क्रमशः पपाठ ॥

'स्वस्ति उज्जयिनीतः ; महाराजाधिराजो देवस्तारापीडः सर्वसम्पदामायतनं चन्द्रापीडम् उत्तमाङ्गे चुम्बन्नन्दयति । कुशलिन्यः प्रजाः । किन्तु कियानपि कालो भवतो दृष्टस्य गतः । बलवदुत्कण्ठितं नो हृदयम् । अतो लेखवाचनविरतिरेव प्रयाणकालतां नेतव्या'—इति ।

शुकनासप्रेषिते द्वितीयेऽपि अमुमेवार्थमवाचयत् । अथ यथाज्ञापयति तातः, इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहम् अनादयत् । समीपे स्थितं महाबलाधिकृतं मेघनादनामानम्—'भवता पत्रलेखया सह आगन्तव्यम् । नियतं च केयूरकः तामादाय एतावतीं भूमिमागमिष्यति'—इत्यादिश्य वैशम्पायनं स्कन्धावारभरे नियुज्य तमेव लेखहारकम् उज्जयिनीमार्गं पृच्छन् प्रतस्थे ॥

क्रमेण च दिवसान्यतिक्रम्य स्वर्णाभेषु प्रदेशेषु कृतवसतिः कतिपयैरेव अहोभिः उज्जयिनीं प्रविवेश । तत्र प्रसारितभुजेन एह्येहि इत्याहूय पित्रा सुचिरं गाढम् उपगूढः कृतनमस्कारश्चन्द्रापीडः करे गृहीत्वा विलासवतीभवनम् सबहुमानं गतः । तथापि तथैव प्रत्युद्गम्य अभिनन्दितागमनः तत्र दिग्विजयसम्बन्धाभिरेव कथाभिः कंचित् कालं स्थित्वा शुकनासं द्रष्टुम् आययौ । तत्रापि तथैव

क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्तिनं कुशलिनम्, आलोक्य मनोरमाम्, आगत्य च विलासवतीभवन एव सर्वाः स्नानादिकाः क्रियाः निरवर्तयत्। ततो निजभवनं गत्वा रणरणकखिद्यमानमानसः कादम्बर्यां विना सकलमेव महीमण्डलं शून्यम् अमन्यत। तद्वार्ताश्रवणोत्सुकश्च पत्रलेखागमनं प्रत्यपालयत् ॥

कतिपयदिवसापगमे मेघनादः पत्रलेखाम् आदाय आगच्छत्। कृतनमस्कारा च सा चन्द्रापीडमब्रवीत्—'देव! भवन्तमुद्दिश्य विषमशरशिलीमुखजर्जरितहृदयां देवीं कादम्बरीं दूरीकुर्वता देवेन किमिदम् आपन्नवत्सलायाः स्वप्रकृतेः अनुरूपं कृतम्? अहं किल मन्मथस्य परां कोटिमधिरूढया तया सद्य एव भवन्तम् आनेतुमेव प्रेषितास्मि'—इति ॥

श्रुत्वैतत् चन्द्रापीडः नितरां पर्याकुलः चेतस्यकरोत्—'अहो सन्देहदोलाधिरूढं मे जीवितम्! एवम् आज्ञापितम् आगमनाय मे निष्कारणवत्सलया देव्या कादम्बर्या। अम्बा तु मे निमेषमात्रमपि माम् अपश्यन्ती दुःखम् आस्ते। दुस्त्यजा जन्मभूमिः। परिग्राह्या कादम्बरी। कालातिपातासहं मनः। विप्रकृष्टमन्तरं हेमकूटविन्ध्याचलयोः'—इति। एवम् अलब्धनिर्वृतिः चन्द्रापीडः कथमपि कतिपयान् वासरान् गमयामास ॥

अथ एकदा केयूरकोऽपि चन्द्रापीडमागत्य व्यजिज्ञपत्—'देव! यदैव पत्रलेखां मेघनादाय समर्प्य प्रतिनिवृत्तेन मया अयं देवस्य उज्जयिनीगमनवृत्तान्तो निवेदितः, तदा महाश्वेता

दीर्घम् उष्णं च निश्वस्य सनिर्वेदम् उत्थाय पुनस्तपसे स्वमेव आश्रमपदम् अभजत । ततः घृणामिहतेव असह्यवेदना कादम्बरी त्वदर्थे संप्रति महान्तम् आयासम् अनुभवति । तत् अविलम्बेनैव गमनाय यत्नः क्रियताम्'—इति ॥

श्रुत्वैतत् चन्द्रापीडः एवं व्यचिन्तयत्—'किं कारणं व्यपदिश्य अहम् आत्मानं मोचयामि ? कथं वा मुञ्चतु मां तातः; अम्बा वा ? सुहृत्साध्ये अस्मिन्नर्थे किं करोम्येकाकी । वैशम्पायनोऽपि असंनिहितः पार्श्वे मे'—इत्येवं चिन्तयन् 'दशपुरं यावत् परागतः स्कन्धावारः' इति किंवदन्तीं श्रुत्वा प्रहर्षपरवशः केयूरकम् अभ्यधात्—'केयूरक ! करतलवर्तिनीं सिद्धिम् अवधारय, प्राप्तो वैशंपायनः'—इति । ततः मेघनादकेयूरकौ पत्रलेखया सह पुरतः विसृज्य वैशम्पायनावलोकनत्वरितमानसः पित्रा अनुमतः दशपुरं प्रति प्रतस्थे । गत्वा च प्रविश्य स्कन्धावारं समन्तात् अञ्जलिव्यग्रहस्तान् परिजनान्, 'कस्मिन् प्रदेशे वैशम्पायनस्तिष्ठति' ? इति पप्रच्छ । ते चैवं व्यजिज्ञपन्—

"देव ! 'पृष्ठतः स्कन्धावारमनुपालयद्भिः शनैः शनैः भवद्भिः आगन्तव्यम्' इत्यादिश्य गतवति देवे, परेद्युः आहूतायां प्रयाणभेर्याम्, अस्मान् वैशम्पायनः अभ्यधात्—'अतिपुण्यं हि अच्छोदाख्यं सरः पुराणे श्रूयते । तत् अस्मिन् स्नात्वा, प्रणम्य चास्यैव तीरभाजि सिद्धायतने भगवन्तं भवानीपतिं व्रजाम'—इत्यभिधाय चरणाभ्यामेव अच्छोदसरस्तीरम् अयासीत् । तत्र च अतिरम्यतया सर्वतो दत्तदृष्टिः संचरन् आगमनायानुरुध्यमानः परिच्छेद-

निष्ठुरम् अस्मान् आह स्म—'मया तु न गन्तव्यम् अस्मात् प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारमादाय'—इत्युक्तवन्तं तम् अकस्मान्नाम वैराग्यकारणमुत्पन्नम् इत्याशङ्क्य सानुनयम् आगमनाय पुनःपुनः प्रतिबोध्य तादृशासंबद्धानुष्ठानेन जातपीडाः निष्ठुरमपि अभिहितवन्तो वयम्। तथापि अनिवार्यदुराग्रहे तस्मिन्, किमेतत् इति विस्मितान्तरात्मानः दिनत्रयं स्थित्वा निष्प्रत्याशाः तदानयनाय तत्परिकरं तत्र स्थापयित्वा निवृत्ता वयम्''—इति ॥

एतदाकर्ण्य चन्द्रापीडः पर्याकुलितचेताः सद्य एव नगरम् आगत्य पित्रानुमतः तदानयनाय तमेव उद्देशम् अभिप्रतस्थे। आसाद्य च तदेव अच्छोदं चतुर्ष्वपि पार्श्वेषु अन्विष्यन्नेव महाश्वेताश्रमम् आजगाम। प्रविश्य च गुहाद्वार एव समुपविष्टां कथमपि तरलिकया विधृतशरीरां विषण्णवदनां महाश्वेतां दृष्ट्वा 'किमेतत्?' इति तरलिकाम् अपृच्छत् ॥

अथ बाष्पगद्गदकण्ठा महाश्वेतैव प्रत्यवादीत्—'महाभाग! श्रूयताम्—''केयूरकात् भवद्गमनम् आकर्ण्य समुत्पन्नातिकरुण-वैराग्या पुनः कष्टतरतपश्चरणाय अत्रैव आगताहं महाभागस्यैव तुल्याकृतिं ब्राह्मणयुवानम् अपश्यम्। स तु माम् उपसृत्य प्रत्यभिजानन्निव सुचिरमालोक्य अब्रवीत्—'वरतनु! कोऽयं विसदृशानुष्ठाने तव प्रयासः? यदियं मालतीमालेव कण्ठप्रणयैक-योग्या तनुः अनुचितेनामुना तपश्चरणक्लेशेन म्लानिमुपनीयते! स्पृह्यते हि लोके वयसस्सदृशमाचरणं सर्वस्य जनस्य'—इति। अहं तं वदन्तमपि किंचित् अपृष्ट्वैव अन्यतो गत्वा तरलिकामाहूय

वचनम्—'तरलिके ! योऽयं युवा कोऽपि ब्राह्मणाकृतिः, अस्य मामवलोकयतो वदतश्च अन्य एव अभिप्रायो मयोपलक्षितः । तन्निवार्यतामयम्, यथा पुनरत्र नागच्छति । अथ निवारितोऽप्यागमिष्यति, तदावश्यमेव अस्य अमङ्गलं भविष्यति'—इति । स तु निवार्यमाणोऽपि नात्याक्षीदेवानुबन्धनम् ॥

अथातीतेषु केषुचिद्दिवसेषु एकदा गाढायां यामिन्यां स माम् उपसृत्याब्रवीत्—'चन्द्रमुखि ! हन्तुमुद्यतो मामयं कुसुमसायकः । तत् शरणमागतोऽस्मि । रक्ष माम्'—इति । तदाकर्ण्याहम्—'आः पाप ! कथमनिरूप्यैव मत्समयम्, शुक इव प्रलपसि ? कथमेवं वदतो माम् उत्तमाङ्गे तव न पतित वज्रम्'—इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम्—'भगवन् लोकपाल ! यदि मया देवस्य पुण्डरीकस्य दर्शनात् प्रभृति मनसापि अपरः पुमान् न चिन्तितः, तदायम् अलीककामी मदीरितायामेव जातौ पततु'—इति । स च मे वचनेऽस्य अनन्तरमेव छिन्नमूलस्तरुरिव क्षितौ अपतत् । उत्पन्नवीतिनेऽस्मिन् कृतानल्पान् तस्मादिनात् अद्य महाभागस्यैव मिलनम् अहमविगतवती'—इति वाष्पं विममर्ज । तदाकर्ण्य चन्द्रापीडस्य शरभारनम्रं हृदयम् अस्फुटत् । परिजनास्तु निश्चेष्टम् अवनीतले पतितं तमालोक्य कलकलमातेनुः ॥

अथान्तरे पत्रलेखानिवेदितचन्द्रापीडागमना कादम्बरी, महाश्वेतादर्शनं व्याजीकृत्य, मदलेखया सह तत्र आजगाम । दृष्ट्वा च तं तथाविधं सा किमिदमिति समुद्वेगा मुक्ताक्रन्दा

धरातले निपपात। अथ चिरात् लब्धसंज्ञा कादम्बरीं महाश्वेता कण्ठे गृहीत्वा एवमवादीत्—'प्रियसखि! तवास्ति काचन प्रत्याशा, मम पुनर्हताशायाः सापि नास्ति। तदिममात्मानं देवस्य कण्ठलग्ना विभावसौ निर्वापयामि। आमन्त्रये प्रियसखीम् पुनर्जन्मान्तर-समागमाय'—इत्यभिधाय चन्द्रापीडचरणौ कराभ्यामुत्क्षिप्य अङ्के धृतवती॥

अथ तत्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहात् झटित्य-व्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरुज्जगाम। अनन्तरं च विहायस्यशरीरिणी वागश्रूयत—'वत्से महाश्वेते! जानीहि मां चन्द्रमसम्; पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे। तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानं अविनाशि भूयः त्वत्समागमाय तिष्ठत्येव। इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेषतोऽमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडशरीरमत्रैव भवत्योः प्रत्ययार्थम् आशापक्षयात् आस्ताम्। यत्नतः परिपालनीयम् आसमागमप्राप्तेः'—इति॥

तच्छ्रुत्वा विस्मयाक्षिप्तहृदयः सर्व एव परिजनः गगन-तलनिवेशितनिर्निमेषलोचनः लिखित इवातिष्ठत्। पत्रलेखा तु दारुणं तद्दुःखम् असहमाना भूताविष्टेव सरभसम् उत्थाय परिवर्धकहस्तात् इन्द्रायुधमाच्छिद्य तेनैव सह आत्मानम् अच्छोद-सरस्यक्षिपत्॥

अथ तयोः निमज्जनसमयानन्तरमेव तस्मात् सरःसलिलात् उद्विग्नाकृतिः तापसकुमारः सहसैव उदतिष्ठत्। उत्थाय च दूरत

एवं विलोकयन्तीं महाश्वेताम् उपसृत्य बभाषे—'गन्धर्वराजपुत्रि ! जन्मान्तरगतोऽपि प्रत्यभिज्ञायतेऽयं जनो न वा'—इति । सा तेन दृष्टा शोकानन्दमध्यवर्तिनी ससंभ्रमम् उत्थाय कृतपादवन्दना अभ्यवादीत्—'भगवन् कपिञ्जल ! नाहं एवंविधा अपुण्यवती । या भवन्तमपि न प्रत्यभिजानामि । कथय केनासौ देवो भवतः सह समुत्क्षिप्य नीतः ? कथमेतावता कालेन वार्तापि न दत्ता ? पुनर्वा त्वमेकाकी देवेन विना समायातः ?'—इति । स तु अभ्यवादीत्— "गन्धर्वराजपुत्रि ! श्रूयताम्—

वारद्वयम् अवश्यम् उत्पत्तव्यम्। अन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था भवति। तावत् अस्य शरीरस्य मा विनाशः भूत् इति मयेदम् उत्क्षिप्य समानीतम्। वत्सा च महाश्वेता समाश्वासिता। अधुना त्वं गत्वा एनं वृत्तान्तं श्वेतकेतवे निवेदयेः। महाप्रभावोऽसौ कदाचित् अत्र प्रतिक्रियां कांचिदपि कुर्यात्'—इति॥

अहं तु विना वयस्येन शोकान्धः गीर्वाणवर्त्मनि प्रधावन् अतिक्रोधनं वैमानिकमेकम् अलङ्घयम्। स तु मां दहन्निव निरीक्ष्य अब्रवीत्—'यत् त्वयाहं तुरंगमेणेव उल्लङ्घितः तस्मात् तुरङ्गम एव भूत्वा मर्त्यलोकेऽवतर'—इति। अहं तु तं कृताञ्जलिरवदम्—'भगवन्! वयस्यशोकान्धेन त्वं मयोल्लङ्घितः, नावज्ञया। तत्प्रसीद। उपसंहर शापम्'—इति। स तु मां पुनरवादीत्—'यन्मयोक्तं तन्नान्यथा भवितुमर्हति। तदेतच्च करोमि। कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि'—इति। एवमुक्तस्तु तमहमवदम्—'भगवन्! यद्येवं यथा मे तुरङ्गमत्वेऽपि चन्द्रमसा सह मर्त्यलोके अवतरिष्यता वयस्येन पुण्डरीकेण सहावियोगो भवेत्, तथानुगृह्यताम्'—इति। स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत्—

'उज्जयिन्यामपत्यहेतोः तपस्यतः तारापीडस्य राज्ञः चन्द्रमसा तनयत्वम् उपगन्तव्यम्। वयस्येनापि ते तन्मन्त्रिण एव शुकनासस्य। त्वमपि तस्य राजपुत्रस्य वाहनतामुपयास्यसि'—इति। अहं तु तद्वचनानन्तरमेव महोदधौ न्यपतम्। तस्माच्च तुरङ्गीभूयेव उदतिष्ठम्। अवाप्य च पारसीकाधिपतिं तेन च

तारापीडस्योपायनीकृतः चन्द्रापीडस्य वाहनतामुपागच्छत् । योऽसौ चन्द्रापीडः स चन्द्रमसोऽवतारः । योऽप्यसौ प्राक्तनानुरागसंस्कारात् अभिलपन् अजानत्या त्वया शापाग्निना निर्दग्धः, सोऽपि मे वयस्यपुण्डरीकस्यावतारः'—इति ॥

तदाकर्ण्य महाश्वेता—'हा देव पुण्डरीक ! जन्मान्तरेऽपि अविस्मृतमदनुराग ! लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता'—इत्युच्चैरुक्त्वार्तनादा सोरस्ताडनम् आत्मानम् अवनावपातयत् । कपिञ्जलस्तु तथा कृतप्रलापां तां प्रत्यवादीत्—'गन्धर्वराजपुत्रि ! कस्तवात्र दोषः ? यथा च शापदोषात् भवत्योर्द्वयोरपि दुःखम् , तथा मया कथितमेव; चन्द्रमसोऽपि भारती भवतीभ्यां श्रुतैव । तदुन्मुच्यतामयं शोकानुबन्धः । यदेवारब्धं तदेवानुपद्यताम्'—इति ॥

अथ कादम्बरी कपिञ्जलमवादीत्—'भगवन् ! पत्रलेखया त्वया चास्मिन् मरणेऽपि अनुप्रवेशः कृतः । तत्किं तस्याः पत्रलेखायाः संवृत्तम् ?'—इति । स तु प्रत्यवादीत्—'राजपुत्रि ! चन्द्रापीडपतनानन्तरं न किमपि तद्वृत्तान्तो मया ज्ञातः । तदधुना क्व चन्द्रापीडस्य, क्व वैशम्पायनस्य जन्म ? किं पत्रलेखायाः वृत्तम् ? इति ज्ञातुम् तातपादस्य जगद्गुरोः भगवतः श्वेतकेतोः पार्श्वम् गमिष्यामि'—इत्यभिधाय एव गगनमुदगात् ॥

मदलेखाविदितवृत्तान्ताभ्यां पितृभ्याम् 'अवसितशापेन जामात्रा सहैव वत्सां द्रक्ष्यावः' इति सन्दिश्य सा कादम्बरी निर्विकारवदनं चन्द्रापीडशरीरमेव अहर्निशम् अन्वपालयत् । अथ चन्द्रापीडश्चिरयतीत्युत्ताम्यन् देवस्तारापीडः तद्वार्ताविबोधनाय वार्ताहरान् प्रेषयामास ॥

अथ प्रतिनिवृत्तेभ्यस्तेभ्यः सर्वमपि तं वृत्तान्तं यथावदश्रौषीत् । श्रुत्वा च विस्मयशोकाभ्याम् आक्षिप्तहृदयं तं शुकनासः प्रोवाच—'देव ! विचित्रेऽस्मिन् संसारे किं किं न संभाव्यते । श्रूयन्ते च पुराणरामायणभारतादिष्वागमेषु बहुप्रकाराः शापवार्ताः तद्यथा—महेन्द्रपदवर्तिनो नहुषस्य राजर्षेः अगस्त्यशापात् अजगरता ; सौदासस्य च वसिष्ठसुतशापात् मानुषादत्वम् ; असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गः ; त्रिशङ्कोश्च पितृशापाच्चाण्डालभावः'—इत्यादि ॥

श्रूयते च स्वर्गनिवासी महाभिषो नाम राजा अस्मिन् लोके शन्तनुरुत्पन्नः । तत्पत्नीत्वमुपगतायां गङ्गायां शापदोषादष्टानामपि वसूनामुत्पत्तिः । तिष्ठन्तु तावदन्ये । अयमादिदेवो भगवानज एव जमदग्नेरात्मजतामुपगतः, पुनश्चतुर्धात्मानं विभज्य राजर्षेर्दशरथस्य, तथैव मथुरायां वसुदेवस्य । तन्मनुष्येषु देवानामुत्पत्तिर्नैवासंभाविनी । अपि च गर्भारम्भसंभवे देवेन देव्याः वदने विशंश्चन्द्रमा एव दृष्टः, तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । तदस्मिन् वस्तुनि न मनागपि देवेन शोकः कार्यः ॥

इत्युक्तवति शुकनासे विस्मयान्तरितशोकावेगस्तारापीडः सद्य एव गमनसंविधानमकारयत् । प्रस्थितश्च तद्दिवसयालोकनकुतूहलिन्या गृहवर्जम् उज्जयिन्या अनुगम्यमानः कतिपयैरेव दिवसैः महाश्वेताश्रममाससाद । महाश्वेता तु तदागमनमाकर्ण्य सरभसं धावित्वा ह्रिया गुहान्तरमविशत् । कादम्बरी तु कथंचित् विधृतप्रज्ञा लज्जावनतमुखी यथाक्रमं गुरुवन्दनमकरोत् । तत्र चन्द्रापीडशरीरसंदर्शनक्षुभितहृदयेषु तेषु पौरेषु, सर्वतःप्रवृत्तरोदनशब्दं तत्तपोवनं शोकाधिष्ठानसदनमिवाभवत् । नरपतिस्तु यत्नां धृतिमिवावलम्ब्य सपरिवारः समं देव्या शुकनासेन च तत्रैव तपोवनैकदेशे मृत्युंजयध्यानपरः कालमयापयत् ॥

इत्युक्त्वा स भगवान् जाबालिः—'अहो कथारसस्य चित्ताक्षेपसामर्थ्यम् ! यत्कथयितुं प्रवृत्तोऽस्मि तत्सरित्यज्यैव अतिदूरमतिक्रान्तोऽस्मि । सः कामोपहतचेताः स्वयंकृतादेव अविनयात् दिव्यलोकतः परिभ्रश्य मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत् ; ॥ एष पुनर्महाश्वेताशापेन शुकजातौ पतितः'— इत्युक्त्वा विरराम ॥

इत्येवं वदत्येव भगवति जाबालौ सुप्तप्रबुद्धस्येव मे पूर्वजन्मोपार्जिताः सर्वाः विद्याः जिह्वाग्रे अस्फुरन् । मनुजस्येव चेयं विस्पष्टा भारती समुत्पन्ना । मनुष्यशरीराभावे स एव चन्द्रापीडस्योपरि स्नेहः, स एव महाश्वेतायामनुरागः, इति सर्वमपि

जन्मान्तरीयं मद्हृदयमविशत् । भगवान् जाबालिस्तु दिक्षु विक्षिपन् चक्षुः 'अहो प्रभातप्राया रजनी!' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् । हारीतस्तु मां निजकरेणैवात्मपर्णशालां नीत्वा शनैः स्वशयनैकदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ ॥

कपिञ्जलस्तु मम पितुः श्वेतकेतोः पादमूलादागत्य स्नातागतेन हारीतेन प्रवेशितः निर्निमेषेण चक्षुषा मां निरीक्ष्य करद्वयेनोत्क्षिप्य वक्षसि निवेश्य भूयसा मन्युवेगेन चिरमरोदीत् । तथा रुदन्तं तु तं दृष्ट्वाहमवदम्—'सखे कपिञ्जल ! किं फलमनेन सकलक्लेशपरिभूते मयि दुरात्मनि स्नेहानुबन्धेन ? त्वं पुनर्बालोऽपि न स्पृष्ट एवामीभिः संसारदोषैः । समुपविश्य तावत्कथय यथावृत्तं सर्वम् । अपि कुशलं तातस्य ? स्मरति वा माम् । मद्वृत्तान्तमाकर्ण्य किमुक्तवान् ? कुपितो वा न वा ?'–इति । सोऽब्रवीत्–'सखे! कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथममेव तातेन दिव्येन चक्षुषा दृष्टः । ततस्तुरगभावाद्विमुक्तो गतोऽस्मि तस्य पादमूलम् । दूरत एव स्थित्वा विषण्णदीनमानसं भयादनुपसर्पन्तं मामाहूयैवमाज्ञापितवान्—'वत्स ! परित्यज्यतां स्वदोषशङ्का । बलवती हि भवितव्यता ! शुकजाताविदानीं सुहृत्ते पतितः । तद्गत्वापि तमद्य नैव वेत्सि । नाप्यसौ त्वां वेत्ति । मया तु वत्सस्य कृते समारब्धमायुष्करं कर्म । तदत्रैव कंचित्कालं स्थीयताम्'—इति ॥

ततस्तथेति तत्पादपरिचर्ययैव कंचन कालमनैषम् । अथ प्रातरेव मामाहूयाज्ञापितवान्—'वत्स कपिञ्जल ! महामुनेर्जाबाले-

राश्रमं मुहूर्त्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्तव्योऽसौ—'वत्स ! यावदिदं कर्म परिसमाप्यते, तावत्त्वयास्मिन्नेव जाबालेराश्रमे स्थातव्यमिति'—इत्युक्त्वा कपिञ्जलः क्षणमिव स्थित्वा—'सखे ! प्रतिपालय निदेशं तातस्य, अहं तु समारब्धकर्मणः तस्यैव प्रत्यनन्तरीभवामि'—इत्यभिदधान एवान्तरिक्षमतिक्रम्यादर्शनमगात् ॥

अथ हारीतेन प्रतिदिनमाहारादिभिरुपचारैः संवर्धितोऽहं कतिपयैरेव दिवसैः संजातपक्षोऽभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम्—'गमनक्षमस्तु संवृत्तोऽस्मि । तत्किमुत्पन्नज्ञानोऽपि दयितजनविरहेणात्मानं क्लेशयामि ? भवतु तत्रैव गत्वा तिष्ठामि, यत्र महाश्वेता आस्ते'—इति निश्चित्यैकदा प्रातर्विहारनिर्गत एव उत्तरां ककुभं गृहीत्वा अवहम् । अपरिचितगमनतया स्तोकमेव गत्वा शिथिलितपक्षतिः कस्यचित् तरोरग्रमवालम्बिषि । तत्रैव किंचिद्विश्रम्य पश्चाद्यास्यामीति तस्यैव तरोर्मूलभागमेवावतीर्य अध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव प्रबुद्धस्तन्तुपाशैर्बद्धमात्मानमलक्षयम् । अग्रतश्च क्रूराकृतिं पुरुषमेकमालोक्य तमपृच्छम्—'भद्र ! कस्त्वम् ? किमर्थं चाहं बद्धोऽस्मि?'—इति । स तु मामुक्तवान्—"महात्मन् ! अहं खलु जात्या चण्डालः । मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे कृतावस्थानः । तस्य चैका दुहिता प्रथमे वयसि वर्तते। तस्यास्त्वं केनापि दुरात्मना कथितः, यथा-'जाबालेराश्रमे महाश्चर्यकारी शुकस्तिष्ठति'—इति ।

तच्छ्रुत्वा बहवो मादृशास्त्वद्ग्रहणाय तया समादिष्टाः तदद्य पुण्यैर्मया त्वमासादितोऽसि। बन्धे मोक्षे चाधुना सैव प्रभवति"—इति ॥

अहं तु तच्छ्रुत्वा चेतस्यकरवम्—'अहो मे दारुणः कर्मविपाकः! येन मया जगत्त्रयनमस्यस्य श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकवासिना भूत्वा अधुना पक्कणमपि प्रवेष्टव्यम् ; चाण्डालैः सहैकत्र स्थातव्यम् ; मातङ्गवृद्धाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः ; चण्डालबालजनस्य क्रीडनीयेन भवितव्यम्'—इति चिन्तयन्तमेव मां नीत्वा स तस्यै चाण्डालदारिकायै समर्पितवान्। सा तु प्रहृष्टवदना 'शोभनं कृतम्' इत्यभिधाय दारुपञ्जरे मामाक्षिप्यार्गलितद्वारा 'अत्रैव निर्वृतस्तिष्ठ' इति मामायभाषे ॥

अथ महासंकटे पतितोऽस्मीति निर्विण्णहृदयोऽहं मौनग्रहणं कृत्वा तदुपनीतेषु पानाशनादिषु निर्व्यपेक्ष एव कतिपयं कालमयापयम्। अस्मिन् प्रत्युषसि तु प्रबुद्धोऽहं कनकपञ्जरस्थितमात्मानमद्राक्षम्। सद्य एव मामादायैषा देवपादमूलमायाता। तत्केयम्? किमर्थं वाहं बद्धः? किमर्थमिहानीतः इत्यत्र देव इयाहमपि अनपगतकुतूहल एव"—इति वैशम्पायनो विरराम ॥

राजा तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलः चण्डालकन्यकानयनाय पुरःस्थितां प्रतीहारीमादिदेश। अथ प्रविश्य सा राजानं बभाषे—'भो भुवनभूषण! तारारमण! कादम्बरीलोचनानन्दकर! सर्वस्त्वयास्य दुर्मतेरात्मनश्च वृत्तान्तः श्रुत एव। अहमपि दुरात्मनोऽस्य जननी श्रीः। तथाभूतमेनं दृष्ट्वास्य पित्राहमादिष्टा—

'देवि! यावदिदं कर्म परिसमाप्यते तावदेनं मर्त्यलोके यत्नाद् धारय। यथा चास्यानुतापो भवति तथा विधीयताम्'—इति तदस्य विनयायेदं विनिर्मितं मया। सर्वमधुना तत्कर्म परिसमाप्तम्। शापावसाने च युवयोः सममेव सुखेन भवितव्यमिति मयायं त्वत्समीपमानीतः। अत्रापि च लोकसंपर्कपरिहाराय चाण्डालजातिः ख्यापिता। तदनुभवतां संप्रति द्वावपि दुःखबहुले तनू परित्यज्येष्टजनसमागमसुखम्,'—इत्यभिदधानैव क्षितेर्गगनमुदपतत्॥

शूद्रकोऽपि सपदि संस्मृतजन्मान्तरीयवृत्तान्तः वैशम्पायनेन सह सद्यः काष्ठीभूतं देहमहासीत्। अत्रान्तरे मधुमाससुलभेन मनसिजविकारेण पर्याकुलितहृदया कादम्बरी सायमेकान्ते चन्द्रापीडतनुं निर्भरं कण्ठे जग्राह। ततः सद्य एव प्रत्यापन्नजीवितश्चन्द्रापीडः चक्षुरुन्मील्य सुप्तप्रतिबुद्ध इवोत्थाय कादम्बरीमवादीत्—'भीरु! परित्यज्यतां भयम्। प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण। अद्यैव निवृत्तशापेन मया परित्यक्ता सा शूद्रकाख्या तनुः'—इत्यभिदधत्येव चन्द्रावतारे चन्द्रापीडे पुण्डरीकोऽपि कपिञ्जलकरावलम्बी गगनादवततार॥

दृष्ट्वा च तं प्रियसखीदयितं कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेतायै प्रादर्शयत्। मृत्युंजयजपव्यग्रस्तारापीडोऽपि मदलेखानिवेदितवृत्तान्तः सह विलासवत्या सरभसमागत्य पादयोः पतितं चन्द्रापीडं गाढमालिलिङ्ग। तदानीमेव कपिञ्जलः समुपसृत्य शुकनासमवादीत्। एवं संदिष्टमार्यस्य भगवता श्वेतकेतुना

तच्छ्रुत्वा बहवो मादृशास्त्वद्ग्रहणाय तया समादिष्टाः तदद्य पुण्यैर्मया त्वमासादितोऽसि। बन्धे मोक्षे चाधुना सैव प्रभवति"—इति ॥

अहं तु तच्छ्रुत्वा चेतस्यकरवम्—'अहो मे दारुणः कर्मविपाकः! येन मया जगत्त्रयनमस्यस्य श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकवासिना भूत्वा अधुना पक्कणमपि प्रवेष्टव्यम्; चाण्डालैः सहैकत्र स्थातव्यम्; मातङ्गवृद्धाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः; चण्डालबालजनस्य क्रीडनीयेन भवितव्यम्'—इति चिन्तयन्तमेव मां नीत्वा स तस्यै चाण्डालदारिकायै समर्पितवान्। सा तु प्रहृष्टवदना 'शोभनं कृतम्' इत्यभिधाय दारुपञ्जरे मामाक्षिप्यार्गलितद्वारा 'अत्रैव निर्वृतस्तिष्ठ' इति मामायभाषे ॥

अथ महासंकटे पतितोऽस्मीति निर्विण्णहृदयोऽहं मौनग्रहणं कृत्वा तदुपनीतेषु पानाशनादिषु निर्व्यपेक्ष एव कतिपयं कालमयापयम्। अस्मिन् प्रत्युषसि तु प्रबुद्धोऽहं कनकपञ्जरस्थितमात्मानमद्राक्षम्। सद्य एव मामादायैषा देवपादमूलमायाता। तत्केयम्? किमर्थं चाहं बद्धः? किमर्थमिहानीतः इत्यत्र देव इवाहमपि अनपगतकुतूहल एव"—इति वैशम्पायनो विरराम ॥

राजा तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलः चण्डालकन्यकानयनाय पुरःस्थितां प्रतीहारीमादिदेश। अथ प्रविश्य सा राजानं बभाषे—'भो भुवनभूषण! तारारमण! कादम्बरीलोचनानन्दकर! सर्वस्त्वयास्य दुर्मतेरात्मनश्च वृत्तान्तः श्रुत एव। अहमपि दुरात्मनोऽस्य जननी श्रीः। तयाभूतमेनं दृष्ट्वास्य पित्राहमादिष्टा—

देवि ! यावदिदं कर्म परिसमाप्यते तावदेनं मर्त्यलोके बद्ध्वा धारय । यथा चास्यानुतापो भवति तथा विधीयताम्'—इति तदस्य विनयायेदं विनिर्मितं मया । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसाने च युवयोः सममेव सुखेन भवितव्यमिति मयायं त्वत्समीपमानीतः । अत्रापि च लोकसंपर्कपरिहाराय चाण्डाल-जातिः ख्यापिता । तदनुभवतां संप्रति द्वावपि दुःखबहुले तनू परित्यज्येष्टजनसमागमसुखम्,—इत्यभिदधानैव क्षितेर्गगनमुदपतत् ॥

शूद्रकोऽपि सपदि संस्मृतजन्मान्तरीयवृत्तान्तः वैशम्पायनेन सह सद्यः काष्ठीभूतं देहमहासीत् । अत्रान्तरे मधुमाससुलभेन मनसिजविकारेण पर्याकुलितहृदया कादम्बरी सायमेकान्ते चन्द्रा-पीडतनुं निर्भरं कण्ठे जग्राह । ततः सद्य एव प्रत्यापन्नजीवितश्चन्द्रा-पीडः चक्षुरुन्मील्य सुप्तप्रतिबुद्ध इवोत्थाय कादम्बरीमवादीत्—'भीरु ! परित्यज्यतां भयम् । प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठ-ग्रहेण । अद्यैव निवृत्तशापेन मया परित्यक्ता सा शूद्रकाख्या तनुः' —इत्यभिदधत्येव चन्द्रावतारे चन्द्रापीडे पुण्डरीकोऽपि कपिञ्जल-करावलम्बी गगनादवततार ॥

दृष्ट्वा च तं प्रियसखीदयितं कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेतायै प्रादर्शयत् । मृत्युंजयजपव्यग्रस्तारा-पीडोऽपि मदलेखानिवेदितवृत्तान्तः सह विलासवत्या सरभसमागत्य पादयोः पतितं चन्द्रापीडं गाढमालिलिङ्ग । तदानीमेव कपिञ्जलः समुपसृत्य शुकनासमवादीत् । एवं संदिष्टमार्यस्य भगवता श्वेतकेतुना

—अयं खलु पुण्डरीको मया संवर्धितः तवाप्यात्मजः । तद्वैशम्पायन एवायमित्यवगत्याविनयेभ्यो निवारणीयः । परोऽयमिति कृत्वा नोपेक्षणीयः—इति । शुकनासोऽपि तमादेशं शिरसा प्रतिजग्राह । अथापरेद्युः प्रभाते केयूरकनिवेदितवृत्तान्तौ चित्ररथहंसौ सह मदिरागौरीभ्यां तत्रैवाजग्मतुः । परस्परं मिलितानां सविस्मयसंवादानां तेषां निरवधिको महोत्सवः प्रावर्तत ॥

अथ ते हेमकूटं गत्वा यथाविधि दंपत्योरुभयोः विवाहक्रियां निरवर्तयन् । एकदा कादम्बरी चन्द्रापीडं रहस्यप्राक्षीत्—'आर्यपुत्र ! सर्वे वयं मृताः पुनर्जीविताः संगताश्च । सा पुनर्वराकी पत्रलेखा कथंभूता ?'—इति । सोऽपि प्रत्यवादीत्—'सा हि रोहिणी शप्तं मामुपश्रुत्य मत्परिचर्यायै मर्त्यलोकमवातारीत् । जन्मान्तरं गच्छता मया पुनरात्मलोकं विसर्जिता'—इति । अथ चन्द्रापीडो हेमकूट एव कतिपयदिवसगणं नीत्वा कादम्बरीपुण्डरीकमहाश्वेताभिः सममुज्जयिनीमागत्य राज्येऽभिषिक्तः पुण्डरीकनिवेशितसमस्तराज्यभारः कादम्बरीलोचनानन्दकरः परां कोटिमानन्दस्याध्यगच्छत् ॥

चन्द्रापीडचरितं संपूर्णम्



## GLOSSARY

N B This follows page order

1 विदिशाभिधानायां नगर्याम्=in the city called Vidisha

नवे वयसि वर्तमानोऽपि=though he was in fresh youth

तृणवत्=as a grass (as trifle)

अवधूतपरिग्रहसुख=who has spurned all pleasures of the harem

मृगयादिभिरेव=by hunting etc

विनोदितहृदय=amusing his mind

अयापयत्=spent

एकदा=once

आस्थानमण्डपगताम्=sitting in assembly hall

पञ्जर=a cage

उपसृत्य=having approched him

आत्मीय क्रियताम्=make your own

अपससार=retired

विमुक्ताहारम्=without food and deprived of pearl necklace

आदित प्रभृति=from the beginning

कार्त्स्न्येन=in full

2 पश्चिम=western

जीर्ण=worn out

शाल्मलीवृक्ष=silk cotton tree

तस्य कोटरे=in a hallow of the tree

शबर a hunter

क्षुत्पिपासातुर=tortured by hunger and thirst

विचरमाण=moving about

कुतूहल=curiosity

अहमहमिकासमानीतेन= brought in with great enthusiasm

अहमहमिका = a running forword with great emulation

नीवार = grains growing without cultivation

उपचर्यमाणम् = served with

दिव्येन चक्षुषा = through his devine vision

अपरस्मिन् जन्मनि = in previous birth

लीलोपधान = pleasure cushions

चरमे यामिनीयामे = in the last quarter of the night

3 सपन्ना = fulfilled

विकच = full bloomed

मनोरमा = name of the wife of Shukanasa

अवितथफला – fruitfull

प्रशस्तायां वेळायाम = in an auspicious hour

विप्रजनोचितम् = suitable to brahmans

बालक्रिया = ceremonies belonging to childhood

यथास्वम् = their own

पात्रवशात् = by the capacity of the worthy pupil

प्रत्यतिष्ठिपत् = inaugurated

अयोनिजम् = not born of the womb

अश्वतल्लजम् = an excellent horse

शातक्रतवीम् = belonging to Indra e g East

त्रिशङ्कुतिलकाम् – which has Thrishanku as its sign e g South

वरुणलाञ्छना = marked by Varuna e g West

4 सप्तर्षिताराशबलाम् = variegated in colour by seven sages e g North

विजिग्ये = conquered

विश्रामहेतो = for repose

यदृच्छया = incidentally

समुखागतम् – which stood before him

प्रस्तरप्रतिहतगतिप्रसर = his

movement being checked by rocks
अभिनिवेशः = attachment
परिभ्रमता = wandering
मर्त्यः = a man
बहुशः = often
उत्तरेण सुवर्णपुरम् = to the north of Suvarnapura
निर्मानुषम् = uninhabited

5. अंशुमाली = the sun
परिश्रान्तः = tired
पर्याणम् = a saddle
खलीन = bridle
लुठितोत्थितम् = having rolled himself
यवसग्रासम् = a few mouth

पश्चिमया = western
हिमकरकिरणावदातवर्णाम् = as white as the rays of the moon

6. अनिमेषपक्ष्मणा = unwinking
सप्रश्रयम् = with reverence
किन्नरमिथुनानुसरणप्रसङ्गेन = in persuit of the pair of kinnaras
भिक्षाकपालम् = begger's boul
संयम्य = tying up
प्रस्रवणजलम् = water of the torrent
उपस्पृश्य – आचम्य = having rinsed his –

the prattles of boyhood
मधुमास = month of Chaitra
उपनीतम् = carried on
अभिभूतान्यपरिमलम् = *suppressing all other smells*
सवयसा = with his friend
कर्णावतंस = ear ornament
परवशीकृता = over powered
सविभ्रमम् = gracefully
तरलताम् अनयत् = unsteadied
कौतुकम् = curiosity

9. कर्णपूरीकृता = was made an ornament to ears
रुचित = desired
प्रत्यासीदति = approaches
उदचलम् = I went
निस्पन्दम् = motionless
मदन्तरङ्गनिर्विशेषया = possessing my perfect confidence

10. अत्यवाहयम्=I spent
प्राहिणवम् = I sent
विवक्षुः = desiring to say
अव्यतिरिक्ता = not different
लज्जामन्थरम् = slowly with shyness

11. निर्भर्त्स्यताम् = let be *reproached*
आशीविषविषवेगविषमाणाम् = as cruel as snake-poison
प्राणिमि = I live
अकालान्तरक्षमः=cannot brook any more delay
अतिह्रेपणम् = shameful
यत् प्राप्तकालम् = what is needful for the occasion
अनुबध्नाति = entangles
उपलभ्य = having known

12. किंकर्तव्यतामूढा = not knowing what to do
यदत्र साम्प्रतम् = what is proper to do here
तालवृन्त = a fan

13. अस्पन्दत=throbbed
विप्रकर्षात् = owing to the distance
उपालक्षयम् = I heard
निशीथ = midnight
मुषितम् = stolen

मुक्तताराक्रन्दा = uttering a loud cry
प्रस्खलन्ती = with faltering steps

14 चिताम् = pile
मृणाल = lotus fibres
उपरतम् = dead
परिकरम् आबध्य = having girt up his loins
क्षपितवती = spent
वल्कलोपान्तेन = with edge of bark garment

15. संस्थाप्य = having soothed
पश्चिमां सन्ध्याम् = evening worships of Sandhya
कमण्डलु = a water pot used by ascetics
पाणिम् अग्रहीत् = married
उदपादि = was born
कर्णपरम्परा = news going from ear to ear

16 अवितथं कुरु = fulfil
विसर्जिता = was sent
माम् अन्तरेण = about me
प्राभातिकविधि = morning rites
दारक = a boy
विरतवचसि तस्याम् = as she finished speaking
विधुर = distressed

17. मोहविलसितम् = foolish freak
भुजलतावष्टम्भेन = resting on her arms

18 प्रागल्भ्य = daring action

19 परिमित = limited in number
चपला = fickle minded
महाश्वेताव्यतिकरेण = on behalf of Mahashveta
विप्रलम्भक = deceiving person
सहभुवः = inherent

20 वितान = canopy
निरभिमानताम् = humility
जिगमिषति = wishes to go
अनुरोधः = obligation
न श्रद्दधाति = has no faith
परिजनमध्येषु = amongst your attendents

21. स्कन्धावारम् = army